# छान्दोग्य-ब्राह्मण

देव सवितः प्रसुव यज्ञं
प्रसुव यज्ञपतिं भगाय ।
दिव्यो गन्धर्वः केतपूः केतं नः पुनातु
वाचस्पतिर्वाचं नः स्वदतु १

काम वेद ते नाम मदो नामासि
समानयामुँ सुरा ते अभवत् ।
परमत्र जन्माग्ने तपसो निर्मितोऽसि । स्वाहा २

इमं त उपस्थं मधुना सँसृजामि
प्रजापतेर्मुखमेतद्द्वितीयम् ।
तेन पुँसोऽभिभवासि सर्वान्
अवशान्वशिन्यसि राज्ञी । स्वाहा ३

अग्निं क्रव्यादमकृण्वन्गुहानाः
स्त्रीणामुपस्थमृषयः पुराणाः ।
तेनाज्यमकृण्वँस्त्रैशृण्गं त्वाष्ट्रं
त्वयि तद्दधातु । स्वाहा ४

या अकृणतन्नवयन्या अतन्वत
याश्च देव्यो अन्तानभितोऽददन्त ।
तास्त्वा देव्यो जरसा सँव्ययन्त्व्
आयुष्मतीदं परिधत्स्व वासः ५

परिधत्त धत्त वाससैनाँ
शतायुषीं कृणुत दीर्घमायुः ।
शतं च जीव शरदः सुवर्चा

वसूनि चार्ये विभजासि जीवन्   ६

सोमोऽददद्गन्धर्वाय
गन्धर्वोऽदददग्नये ।
रयिं च पुत्राँश्चादाद्
अग्निर्मह्यमथो इमाम्   ७

प्र मे पतियानः पन्थाः कल्पताँ
शिवा अरिष्टा पतिलोकं गमेयम्   ८

प्रास्याः पतियानः पन्थाः कल्पताँ
शिवा अरिष्टा पतिलोकं गम्याः   ९

सग्निरेतु प्रथमो देवताभ्यः
सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् ।
तदयँ राजा वरुणोऽनुमन्यताँ
यथेयँ स्त्री पौत्रमघं न रोदात् । स्वाहा   १०

सिमामग्निस्त्रायतां गार्हपत्यः
प्रजामस्यै जरदष्टिं कृणोतु ।
अशून्योपस्था जीवतामस्तु माता
पौत्रमानन्दमभिविबुध्यतामियँ । स्वाहा   ११

स्द्यौस्ते पृष्ठँ रक्षतु
वायुरूरू अश्विनौ च ।
स्तनंधयान्ते पुत्रान्त्सविताभिरक्षत्व्
आ वाससः परिधानाद्बृहस्पतिर्
विश्वे देवा अभिरक्षन्तु पश्चात् । स्वाहा   १२

स्मा ते गृहेषु निशि घोष उत्थाद्

अन्यत्र त्वद्रुदत्यः सँविशन्तु ।
मा त्वँ रुदत्युर आबाधिष्ठा
जीवपत्नी पतिलोके विराज
पश्यन्ती प्रजाँ सुमनस्यमानाँ । स्वाहा १३

सप्रजस्यं पौत्रमृत्युं
पाप्मानमुत वाघम् ।
शीर्ष्णः स्रजमिवोन्मुच्य
द्विषद्भ्यः प्रतिमुञ्चामि पाशँ । स्वाहा १४

स्परैतु मृत्युरमृतं म आगाद्
वैवस्वतो न अभयं कृणोतु ।
परं मृत्यो अनुपरेहि पन्थाँ
यत्र नो अन्य इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि
मा नः प्रजाँ रीरिषो मोत वीरान् । स्वाहा १५ १

इममश्मानमारोहा-
श्मेव त्वँ स्थिरा भव ।
द्विषन्तमपबाधस्व
मा च त्वं द्विषतामधः १

इयं नार्युपब्रूते
ऽग्नौ लाजानावपन्ती ।
दीर्घायुरस्तु मे पतिः
शतँ वर्षाणि जीवत्व्
एधन्तां ज्ञातयो मम । स्वाहा २

अर्यमणं नु देवं
कन्या अग्निमयक्षत ।

स इमां देवो अर्यमा
प्रेतो मुञ्चतु मामुतः । स्वाहा ३

पूषणं नु देवं
कन्या अग्निमयक्षत ।
स इमां देवो पूषा
प्रेतो मुञ्चतु मामुतः । स्वाहा ४

कन्यला पितृभ्यः पतिलोकँ यती-
यमप दीक्षामयष्ट ।
कन्य उत त्वया वयं धारा उदन्या इवा-
तिगाहेमहि द्विषः ५

एकमिषे विष्णुस्त्वा नयतु ६

द्वे ऊर्जे विष्णुस्त्वा नयतु ७

त्रीणि व्रताय विष्णुस्त्वा नयतु ८

चत्वारि मायोभवाय विष्णुस्त्वा नयतु ९

स्पञ्च पशुभ्यो विष्णुस्त्वा नयतु १०

स्षड्रायस्पोषाय विष्णुस्त्वा नयतु ११

स्सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वा नयतु १२

स्सखा सप्तपदी भव
सख्यं ते गमेयँ
सख्यात्ते मा योषँ

सख्यान्मे मा योष्ठाः   १३

स्सुमङ्गलीरियँ वधूर्
इमाँ समेत पश्यत ।
सौभाग्यमस्यै दत्त्वाया-
थास्तँ विपरेतन   १४

स्समञ्जन्तु विश्वे देवाः
समापो हृदयानि नौ ।
सं मातरिश्वा सं धाता
समु देष्ट्री दधातु नौ   १५

स्गृभ्नामि ते सौभगत्वाय हस्तं
मया पत्या जरदष्टिर्यथासः ।
भगो अर्यमा सविता पुरंधिर्
मह्यं त्वादुर्गार्हपत्याय देवाः   १६

सघोरचक्षुरपतिघ्न्येधि
शिवा पशुभ्यः सुमनाः सुवर्चाः ।
वीरसूर्जीवसूर्देवकामा स्योना
शं नो भव द्विपदे शं चतुष्पदे   १७

सा नः प्रजां जनयतु प्रजापतिर्
आ जरसाय समनक्त्वर्यमा ।
अदुर्मङ्गलीः पतिलोकमाविश
शं नो भव द्विपदे शं चतुष्पदे   १८

सिमां त्वं इन्द्र मीढ्वः
सुपुत्राँ सुभगां कृधि ।
दशास्यां पुत्रानाधेहि

पतिं एकादशं कुरु   १९

स्सम्राज्ञी श्वशुरे भव
सम्राज्ञी श्वश्र्वां भव  ।
ननान्दरि सम्राज्ञी भव
सम्राज्ञी अधि देवृषु   २०

स्मम व्रते ते हृदयं दधातु
मम चित्तमनु चित्तं ते अस्तु  ।
मम वाचमेकमना जुषस्व
बृहस्पतिस्त्वा नियुनक्तु मह्यम्   २१   २

लेखासंधिषु पक्ष्मस्व्
आवर्तेषु च यानि ते  ।
तानि ते पूर्णाहुत्या
सर्वाणि शमयाम्यहम्   १

केशेषु यच्च पापकम्
ईक्षिते रुदिते च यत्  ।
तानि ते पूर्णाहुत्या
सर्वाणि शमयाम्यहम्   २

शीले च यच्च पापकं
भाषिते हसिते च यत्  ।
तानि ते पूर्णाहुत्या
सर्वाणि शमयाम्यहम्   ३

आरोकेषु च दन्तेषु
हस्तयोः पादयोश्च यत्  ।
तानि ते पूर्णाहुत्या

सर्वाणि शमयाम्यहम्   ४

ऊर्वोरुपस्थे जङ्घयोः
संधानेषु च यानि ते ।
तानि ते पूर्णाहुत्या
सर्वाणि शमयाम्यहम्   ५

यानि कानि च घोराणि
सर्वाङ्गेषु तवाभवन् ।
पूर्णाहुतिभिराज्यस्य
सर्वाणि तान्यशीशमम्   ६

ध्रुवा द्यौर्ध्रुवा पृथिवी
ध्रुवँ विश्वमिदं जगत् ।
ध्रुवासः पर्वता इमे
ध्रुवा स्त्री पतिकुले इयम्   ७

अन्नपाशेन मणिना
प्राणसूत्रेण पृश्निना ।
बध्नामि सत्यग्रन्थिना
मनश्च हृदयं च ते   ८

यदेतद्धृदयं तव
तदस्तु हृदयं मम ।
यदिदँ हृदयं मम
तदस्तु हृदयं तव   ९

सन्नं प्राणस्य पड्विँशस्
तेन बध्नामि त्वासौ   १०

स्सुकिँशुकँ शल्मलिँ विश्वरूपँ
सुवर्णवर्णँ सुकृतँ सुचक्रम् ।
आरोह सूर्ये अमृतस्य नाभिँ
स्योनं पत्ये वहतुं कृणुष्व ११

स्मा विदन्परिपन्थिनो
य आसीदन्ति दम्पती ।
सुगेभिर्दुर्गमतीताम्
अपद्रान्त्वरातयः १२

सिह गावः प्रजायध्वम्
इहाश्वा इह पूरुषाः ।
इहो सहस्रदक्षिणो
ऽपि पूषा निषीदतु १३

सिह धृतिरिह स्वधृतिर्
इह रन्तिरिह रमस्व ।
मयि धृतिर्मयि स्वधृतिर्
मयि रमो मयि रमस्व १४ ३

अग्ने प्रायश्चित्ते
त्वं देवानां प्रायश्चित्तिरसि ।
ब्राह्मणस्त्वा नाथकाम उपधावामि ।
यास्याः पापी लक्ष्मीस्
तामस्या अपजहि १

वायो प्रायश्चित्ते
त्वं देवानां प्रायश्चित्तिरसि ।
ब्राह्मणस्त्वा नाथकाम उपधावामि ।
यास्याः पतिघ्नी तनूस्

तामस्या अपजहि   २

चन्द्र प्रायश्चित्ते
त्वं देवानां प्रायश्चित्तिरसि ।
ब्राह्मणस्त्वा नाथकाम उपधावामि ।
यास्या अपुत्र्या तनूस्
तामस्या अपजहि   ३

सूर्य प्रायश्चित्ते
त्वं देवानां प्रायश्चित्तिरसि ।
ब्राह्मणस्त्वा नाथकाम उपधावामि ।
यास्या अपशव्या तनूस्
तामस्या अपजहि   ४

अग्निवायुचन्द्रसूर्याः प्रायश्चित्तयो
यूयं देवानां प्रायश्चित्तयः स्थ ।
ब्राह्मणो वो नाथकाम उपधावामि ।
यास्याः पापी लक्ष्मीर्या पतिघ्नी
यापुत्र्या यापशव्या
ता अस्या अपहत   ५

विष्णुर्योनिं कल्पयतु
त्वष्टा रूपाणि पिँशतु ।
आसिञ्चतु प्रजापतिर्
धाता गर्भं दधातु ते   ६

गर्भं धेहि सिनीवालि
गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवाव्
आधत्तां पुष्करस्रजौ   ७

पुमाँसौ मित्रावरुणौ
पुमाँसावश्विनावुभौ ।
पुमानग्निश्च वायुश्च
पुमान्गर्भस्तवोदरे ८

पुमानग्निः पुमानिन्द्रः
पुमान्देवो बृहस्पतिः ।
पुमाँसं पुत्रँ विन्दस्व
तं पुमाननु जायताम् ९ ४

अयमूर्जावतो वृक्ष
ऊर्जीव फलिनी भव ।
पर्णँ वनस्पतेऽनु त्वा-
नु त्वा सूयताँ रयिः १

येनादितेः सीमानं नयति
प्रजापतिर्महते सौभगाय ।
तेनाहमस्यै सीमानं नयामि
प्रजामस्यै जरदष्टिं कृणोमि २

राकामहँ सुहवाँ सुष्टुती हुवे
शृणोतु नः सुभगा बोधतु त्मना ।
सीव्यत्वपः सूच्याच्छिद्यमानया
ददातु वीरँ शतदायुमुख्यम् ३

यास्ते राके सुमतयः सुपेशसो
याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि
सहस्रपोषँ सुभगे रराणा ४

किं पश्यसि ।
प्रजां पशून्त्सौभाग्यं मह्यं
दीर्घायुष्ट्वं पत्युः ५

या तिरश्ची निपद्यते
अहँ विधरणी इति ।
तां त्वा घृतस्य धारया
यजे सँराधनीमहम् ।
सँराधन्यै देव्यै देष्ट्र्यै ६

विपश्चित्पुच्छमभरत्
तद्धाता पुनराहरत् ।
परेहि त्वँ विपश्चित्
पुमानयं जनिष्यते
ऽसौ नाम ७

इयमाज्ञेदमन्नम्
इदमायुरिदममृतम् ८

मेधां ते मित्रावरुणौ
मेधामग्निर्दधातु ते ।
मेधां ते अश्विनौ देवाव्
आधत्तां पुष्करस्रजौ ९

स्यत्ते सुसीमे हृदयँ
हितमन्तः प्रजापतौ
वेदाहं मन्ये तद्ब्रह्म
माहं पौत्रमघं निगाम् १०

स्यत्पृथिव्या अनामृतं
दिवि चन्द्रमसि श्रितम् ।
वेदामृतस्याहं नाम
माहं पौत्रमघँ रिषम् ११

सिन्द्राग्नी शर्म यच्छतं
प्रजायै मे प्रजापती ।
यथायं न प्रमीयेत
पुत्रो जनित्र्या अधि १२

स्यददश्चन्द्रमसि कृष्णं
पृथिव्या हृदयँ श्रितम् ।
तदहँ विद्वाँस्तत्पश्यन्
माहं पौत्रमघँ रुदम् १३

स्कोऽसि कतमोऽस्य्
एषोऽस्यमृतोऽसि ।
आहस्पत्यं मासं प्रविशासौ १४

स्स त्वाह्ने परिददात्व्
अहस्त्वा रात्र्यै परिददातु
रात्रिस्त्वाहोरात्राभ्यां परिददात्व्
अहोरात्रौ त्वार्धमासेभ्यः परिदत्ताम्
अर्धमासास्त्वा मासेभ्यः परिददतु
मासास्त्व र्तुभ्यः परिददत्व्
ऋतवस्त्वा सँवत्सराय परिददतु
सँवत्सरस्त्वायुषे जरायै परिददात्वसौ १५

सङ्गादङ्गात्सँश्रवसि
हृदयादधि जायसे ।

प्राणं ते प्राणेन संदधामि
जीव मे यावदायुषम् १६

सङ्गादङ्गात्संभवसि
हृदयादधि जायसे ।
वेदो वै पुत्रनामासि
स जीव शरदः शतम् १७

सश्मा भव परशुर्भव
हिरण्यमस्तृतं भव ।
आत्मासि पुत्र मा मृथाः
स जीव शरदः शतम् १८

स्पशूनां त्वा हिङ्कारेणाभिजिघ्राम्यसौ १९ ५

आयमगात्सविता क्षुरेण १

उष्णेन वाय उदकेनैधि २

आप उन्दन्तु जीवसे ३

विष्णोर्दँष्ट्रोऽसि ४

ओषधे त्रायस्वैनम् ५

स्वधिते मैनँ हिँसीः ६

येन पूषा बृहस्पतेर्
वायोरिन्द्रस्य चावपत् ।
तेन ते वपामि ब्रह्मणा

जीवातवे जीवनाय दीर्घायुष्ट्वाय वर्चसे ७

त्र्यायुषं जमदग्नेः
कश्यपस्य त्र्यायुषम्
अगस्त्यस्य त्र्यायुषँ
यद्देवानां त्र्यायुषं
तत्ते अस्तु त्र्यायुषम् ८

अग्ने व्रतपते व्रतं चरिष्यामि
तत्ते प्रब्रवीमि
तच्छकेयं तेन ध्र्यासम् ।
इदमहमनृतात्सत्यमुपैमि । स्वाहा ९

स्वायो व्रतपते व्रतं चरिष्यामि
तत्ते प्रब्रवीमि
तच्छकेयं तेन ध्र्यासम् ।
इदमहमनृतात्सत्यमुपैमि । स्वाहा १०

स्सूर्य व्रतपते व्रतं चरिष्यामि
तत्ते प्रब्रवीमि
तच्छकेयं तेन ध्र्यासम् ।
इदमहमनृतात्सत्यमुपैमि । स्वाहा ११

स्चन्द्र व्रतपते व्रतं चरिष्यामि
तत्ते प्रब्रवीमि
तच्छकेयं तेन ध्र्यासम् ।
इदमहमनृतात्सत्यमुपैमि । स्वाहा १२

स्व्रतानाँ व्रतपते व्रतं चरिष्यामि
तत्ते प्रब्रवीमि

तच्छकेयं तेन ध्र्यासम् ।
इदमहमनृतात्सत्यमुपैमि । स्वाहा १३

सागन्त्रा समगन्महि
प्र सुमर्त्यँ युयोतन ।
अरिष्टाः संचरेमहि
स्वस्ति चरतादयम् १४

सग्निष्टे हस्तमग्रहीत्
सविता हस्तमग्रहीद्
अर्यमा हस्तमग्रहीन्
मित्रस्त्वमसि कर्मणा-
ग्निराचार्यस्तव १५

स्ब्रह्मचर्यमागामुप मा नयस्व १६

स्को नामास्यसौ नामास्मि १७

स्देवस्य ते सवितुः प्रसवे
ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ
हस्तं गृह्णाम्यसौ १८

स्सूर्यस्यावृतमन्वावर्तस्वासौ १९

स्प्राणानां ग्रन्थिरसि मा विस्रसो
ऽन्तक इदं ते परिददाम्यमुम् २०

सहुर इदं ते परिददाम्यमुम् २१

स्कृशन इदं ते परिददाम्यमुम् २२

स्प्रजापते त्वा परिददाम्यसौ   २३

स्देवाय त्वा सवित्रे परिददाम्यसौ   २४

स्ब्रह्मचार्यस्यसौ   २५

स्समिधमाधेह्यपोऽशान
कर्म कुरु मा दिवा स्वाप्सीः   २६

सियं दुरुक्तात्परिबाधमाना
वर्णं पवित्रं पुनती म आगात् ।
प्राणापानाभ्यां बलं आहरन्ती
स्वसा देवी सुभगा मेखलेयम्   २७

सृतस्य गोप्त्री तपसः परस्पी
घ्नती रक्षः सहमाना अरातीः ।
सा मा समन्तमभिपर्येहि भद्रे
धर्तारस्ते मेखले मा रिषाम   २८

स्तत्सवितुर्वरेण्यं
भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात्   २९

स्भूर्भुवः स्वरोँ   ३०

स्सुश्रवः सुश्रवसं मा कुरु
यथा त्वँ सुश्रवः सुश्रवा देवेष्व्
एवमहँ सुश्रवः सुश्रवा ब्राह्मणेषु भूयासम्   ३१

सग्नये समिधमाहार्षं
बृहते जातवेदसे ।
यथा त्वमग्ने समिधा समिध्यस
एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्
ब्रह्मवर्चसेन धनेनान्नाद्येन समेधिषीय । स्वाहा ३२

स्पुनर्मामैत्विन्द्रियं
पुनरायुः पुनर्भगः ।
पुनर्द्रविणमैतु मा
पुनर्ब्राह्मणमैतु मा ३३

स्पुनर्मनः पुनरात्मा म आगात्
पुनश्चक्षुः पुनः श्रोत्रं म आगात् ।
वैश्वानरो अदब्धस्तनूपा
अन्तस्तिष्ठतु मे मनोऽमृतस्य केतुः । स्वाहा ३४ ६

ये अप्स्वन्तरग्नयः प्रविष्टा
गोह्य उपगोह्यो मरूको मनोहाः
खलो विरुजस्तनूदूषिरिन्द्रियहा
अति तान्त्सृजामि १

यदपां घोरँ यदपां क्रूरँ
यदपामशान्तमति तत्सृजामि २

यो रोचनस्तमिह गृह्णामि
तेनाहं मामभिषिञ्चामि ३

यशसे तेजसे ब्रह्मवर्चसाय
बलायेन्द्रियाय वीर्यायान्नाद्याय
रायस्पोषाय त्विष्या अपचित्यै ४

येन स्त्रियमकृणुतम्
येनापामृशतँ सुराम् ।
येनाक्षानभ्यषिञ्चतँ
येनेमां पृथिवीं महीम् ।
यद्वां तदश्विना यशस्
तेन मामभिषिञ्चतम् ५

उद्यन्भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात्
प्रातर्यावभिरस्थात् ।
दशसनिरसि दशसनिं मा कुर्व्
आ त्वा विशाम्या मा विश ६

उद्यन्भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात्
सांतपनेभिरस्थात् ।
शतसनिरसि शतसनिं मा कुर्व्
आ त्वा विशाम्या मा विश ७

उद्यन्भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात्
सायँयावभिरस्थात् ।
सहस्रसनिरसि सहस्रसनिं मा कुर्व्
आ त्वा विशाम्या मा विश ८

चक्षुरसि चक्षुष्ट्वमस्य्
अव मे पाप्मानं जहि ।
सोमस्त्वा राजावतु
नमस्तेऽस्तु
मा मा हिँसीः ९

सुदुत्तमँ वरुण पाशमस्मद्

अवाधमँ वि मध्यमँ श्रथाय ।
अथादित्य व्रते वयं तवानागसो अदितये स्याम   १०

स्श्रीरसि मयि रमस्व   ११

स्नेत्र्यौ स्थो नयतं माम्   १२

स्गन्धर्वोऽस्युपाव उप मामव   १३

स्यक्षमिव चक्षुषः प्रियो वो भूयासम्   १४

सोष्ठापिधाना नकुली
दन्तपरिमितः पविः ।
जिह्वे मा जिह्वलो वाचं
चारु माद्येह वादय   १५

स्वनस्पते वीड्वङ्गो हि भूया
अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः संनद्धो असि वीडयस्व
आस्थाता ते जयतु जेत्वानि   १६   ७

इमा मे विश्वतोवीर्यो
भव इन्द्रश्च रक्षताम् ।
पूषँस्त्वं पर्यावर्तया-
नष्टा आयन्तु नो गृहान्   १

इमा मधुमतीर्मह्यम्
अनष्टाः पयसा सह ।
गाव आज्यस्य मातर
इहेमाः सन्तु भूयसीः   २

गवाँ श्लेष्मासि
गावो मयि श्लिष्यन्तु ३

संग्रहण संगृहाण
ये जाताः पशवो मम ।
पूषैषाँ शर्म यच्छतु
यथा जीवन्तो अप्ययान् ४

भुवनमसि साहस्रम्
इन्द्राय त्वा सृमोऽददात् ।
अक्षतमरिष्टमिलान्दम् ५

गोपोषणमसि गोपोषस्येशिषे गोपोषाय त्वा ।
सहस्रपोषणमसि सहस्रपोषस्येशिषे
सहस्रपोषाय त्वा ६

लोहितेन स्वधितिना
मिथुनं कर्णयोः कृतम् ।
यावतीनाँयावतीनाँ व
ऐषमो लक्षणमकारिषम् ।
भूयसीनांभूयसीनाँ व
उत्तरामुत्तराँ समां क्रियासम् ७

इयं तन्ती गवां माता
सवत्सानां निवेशनी ।
सा नः पयस्वती दुहा
उत्तरामुत्तराँ समाम् ८ ८
इति प्रथमो भागः

द्वितीयो भागः

यः प्राच्यां दिशि सर्पराज
एष ते बलिः १

यो दक्षिणस्यां दिशि सर्पराज
एष ते बलिः २

यः प्रतीच्यां दिशि सर्पराज
एष ते बलिः ३

य उदीच्यां दिशि सर्पराज
एष ते बलिः ४

नमः पृथिव्यै दँष्ट्राय
विश्वभृन्मा तेऽन्ते रिषाम ।
सँहतं मा विवधीर्
विहतं माभिसँवधीः ५

सोमो राजा सोमस्तम्बो राजा
सोमोऽस्माकँ राजा सोमस्य वयँ स्मः ।
अहिजम्भनमसि सौमस्तम्बँ
सौमस्तम्बमहिजम्भनमसि ६

याँ सन्धाँ समधत्त
यूयँ सप्तर्षिभिः सह ।
ताँ सर्पा मात्यक्रामिष्ट
नमो वो अस्तु मा नो हिँसिष्ट ७

मा नस्तोके तनये मा न आयौ

मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान्मा नो रुद्र भामितो वधीर्
हविष्मन्तः सदमित्त्वा हवामहे ८

शतायुधाय शतवीर्याय
शतोतयेऽभिमातिषाहे ।
शतँ यो नः शरदो अजीयाद्
इन्द्रो नेषदति दुरितानि विश्वा ९

ये चत्वारः पथयो देवयाना
अन्तरा द्यावापृथिवी वियन्ति ।
तेषाँ यो अज्यानिमजीतिमावहात्
तस्मै नो देवाः परिदत्तेह सर्वे १०

ग्रीष्मो हेमन्त उत नो वसन्तः
शरद्वर्षाः सुवितं नो अस्तु ।
तेषामृतूनाँ शतशारदानां
निवात एषामभये स्याम ११

इद्वत्सराय परिवत्सराय
सँवत्सराय कृणुता बृहन्नमः ।
तेषाँ वयँ सुमतौ यज्ञियानां
ज्योगजीता अहता स्याम १२

भद्रान्नः श्रेयः समनैष्ट देवास्
त्वयावसेन समशीमहि त्वा ।
स नो मयोभूः पितवाविशस्व
शं तोकाय तन्वै स्योनः स्वाहा १३

समोऽसि प्राण तदृतं ब्रवीम्य्

अमा ह्यसि सर्वमनु प्रविष्टः ।
स मे जराँ रोगमपमृज्य शरीराद्
अपाम एधि मा मृथा न इन्द्र । १४

सग्निः प्राश्नातु प्रथमः
स हि वेद यथा हविः ।
शिवा अस्मभ्यमोषधीः
कृणोतु विश्वचर्षणिः । स्वाहा १५

सेतमु त्वं मधुना सँयुतँ यवँ
सरस्वत्या अधि मनावचकृषुः ।
इन्द्र आसीत्सीरपतिः शतक्रतुः
कीनाशा आसन्मरुतः सुदानवः । स्वाहा १६ १

प्रथमा ह व्युवास
सा धेनुरभवद्यमे ।
सा नः पयस्वती दुहाम्
उत्तरामुत्तराँ समाम् १

प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे
प्रत्यश्वेषु प्रतितिष्ठामि गोषु ।
प्रति प्राणे प्रतितिष्ठामि पुष्टौ
प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मनि २

प्रति द्यावापृथिव्योः प्रतितिष्ठामि यज्ञे ३

स्योना पृथिवि नो भवा-
नृक्षरा निवेशनी ।
यच्छा नः शर्म सप्रथो
देवान्मा भयादिति ४

यत्पशवः प्रध्यायत
मनसा हृदयेन च ।
वाचा सहस्रपाशया
प्रतिबध्नामि वो मनः ५

अनु त्वा माता मन्यताम्
अनु पितानु भ्राता ।
सगर्भ्योऽनु सखा सयूथ्यः ६

आत्तं देवेभ्यो हविः ७

यत्पशुर्मायुमकृतो-
रो वा पद्भिराहते ।
अग्निर्मा तस्मादेनसो
विश्वान्मुञ्चत्वँहसः ८

अग्नावग्निश्चरति प्रविष्ट
ऋषीणां पुत्रो अधिराज एषः ।
स नः स्योनः सुयजा यजाति
यथा देवानां जनिमानि वेद ९

सौलूखलाः संप्रवदन्ति ग्रावाणो
हविष्कृण्वन्तः परिवत्सरीणाम् ।
एकाष्टके सुप्रजसः सुवीरा
ज्योग्जीवेम बलिहृतो वयं ते १०

सिडायास्पदं घृतवत्सरीसृपं
जातवेदः प्रति हव्या गृभाय ।
ये ग्राम्याः पशवो विश्वरूपास्

तेषाँ सप्तानां मयि रन्तिरस्तु  ११

सेषैव सा या पूर्वा व्यौच्छत्
सेयमप्स्वन्तश्चरति प्रविष्टा ।
वधूर्जिगाय प्रथमा जनित्री
विश्वे ह्यस्यां महिमानो अन्तः  १२

सेषैव सा या प्रथमा व्यौच्छत्
सा धेनुरभवद्विश्वरूपा ।
सँवत्सरस्य या पत्नी
सा नो अस्तु सुमङ्गली  १३

स्यां देवाः प्रतिपश्यन्ति
रात्रीं धेनुमिवायतीम् ।
सा नः पयस्वती दुहा
उत्तरामुत्तराँ समाम्  १४

स्सँवत्सरस्य प्रतिमाँ
यां त्वा रात्रि यजामहे ।
प्रजामजर्यां नः कुरु
रायस्पोषेण सँसृज  १५

सन्विमं नो अनुमतिर्
यज्ञं देवेषु मन्यताम् ।
अग्निश्च हव्यवाहनः
स नो दाद्दाशुषे मयः  १६  २

स्वाहा सोमाय पितृमते  १

स्वाहाग्नये कव्यवाहनाय  २

अपहता असुरा रक्षाँसि वेदिषदः ३

ये रूपाणि प्रतिमुञ्चमाना
असुराः सन्तः स्वधया चरन्ति ।
परापुरो निपुरो ये भरन्त्य्
अग्निष्टाँल्लोकात्प्रणुदत्वस्मात् ४

एत पितरः सोम्यासो
गम्भीरेभिः पथिभिः पूर्विणेभिः ।
दत्तास्मभ्यं द्रविणेह भद्रँ
रयिं च नः सर्ववीरं नियच्छत ५

अत्र पितरो मादयध्वँ
यथाभागमावृषायध्वम् ६

अमीमदन्त पितरो
यथाभागमावृषायिषत ७

नमो वः पितरो जीवाय
नमो वः पितरः शूषाय ८

नमो वः पितरो घोराय
नमो वः पितरो रसाय ९

स्नमो वः पितरःस्वधायै
नमो वः पितरो मन्यवे १०

स्नमो वः पितरः पितरो नमो वः ११

स्गृहान्नः पितरो दत्त   १२

स्सदो वः पितरो देष्म
सदस्वस्पितरस्देष्म   १३

सेतद्वः पितरो वासः
एतद्वस्पितरस्वासस्  १४

सूर्जँ वहन्तीरमृतं घृतं पयः
कीलालं परिस्रुतँ स्वधा स्थ  ।
तर्पयत मे पितॄन्   १५

साधत्त पितरो गर्भं
कुमारं पुष्करस्रजम्  ।
यथेह पुरुषः स्यात्   १६

सभून्नो दूतो हविषो जातवेदा
अवाड्ढव्यानि सुरभीणि कृत्वा  ।
प्रादात्पितृभ्यः स्वधया ते अक्षन्
प्रजानन्नग्ने पुनरेहि योनिम्   १७

स्वह वपां जातवेदः पितृभ्यो
यत्रैतान्वेत्थ निहितान्पराचः  ।
मेदसः कुल्या अभि तान्स्रवन्तु
सत्या एषामाशिषः सन्तु कामाः    स्वाहा   १८

स्जातवेदो वपया गच्छ देवाँस्
त्वँ हि होता प्रथमो बभूव  ।
सत्या वपा प्रगृहीता मे अस्तु
समृध्यतां मे यदिदं करोमि   १९

स्यत्कुसीदमप्रदत्तं मयेह
येन यमस्य निधिना चराणि ।
इदं तदग्ने अनृणो भवामि
जीवन्नेव प्रति तत्ते ददामि २०

सेकाष्टका तपसा तप्यमाना
जजान गर्भं महिमानमिन्द्रम् ।
तेन देवा असहन्त शत्रून्
हन्तासुराणामभवच्छचीभिः २१ ३

इदं भूमेर्भजामह
इदं भद्रँ सुमङ्गलम् ।
परा सपत्नान्बाधस्वा-
न्येषाँ विन्दते धनम्
अन्येषाँ विन्दते वसु १

इमँ स्तोममर्हते जातवेदसे
रथमिव संमहेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य सँसद्य्
अग्ने सख्ये मा रिषामा वयं तव २

भरामेध्मं कृणवामा हवींषि ते
चितयन्तः पर्वणापर्वणा वयम् ।
जीवातवे प्रतराँ साधया धियो
ऽग्ने सख्ये मा रिषामा वयं तव ३

शकेम त्वा समिधँ साधया धियस्
त्वे देवा हविरदन्त्याहुतम् ।
त्वमादित्याँ आवह ताँ ह्युश्मस्य्

अग्ने सख्ये मा रिषामा वयं तव ४

तपश्च तेजश्च श्रद्धा च ह्रीश्च सत्यं चा-
क्रोधश्च त्यागश्च धृतिश्च धर्मश्च
सत्वं च वाक्च मनश्चात्मा च ब्रह्म च
तानि प्रपद्ये तनि मामवन्तु ।
भूर्भुवः स्वरों
महान्तमात्मानं प्रपद्ये ५

विरूपाक्षोऽसि दन्ताञ्जिः ।
तस्य ते शय्या पर्णे गृहा अन्तरिक्षे विमितँ हिरण्मयम् ।
तद्देवानाँ हृदयान्ययस्मये कुम्भेऽन्तः संनिहितानि ।
तानि बलभृच्च बलसाच्च रक्षतोऽप्रमणी अनिमिषतः सत्यम् ।
यत्ते द्वादश पुत्रास्
ते त्वा सँवत्सरेसँवत्सरे कामप्रेण यज्ञेन याजयित्वा
पुनर्ब्रह्मचर्यमुपयन्ति ।
त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु
ब्राह्मणो वै ब्राह्मणमुपधावत्युप त्वा धावामि ।
जपन्तं मा मा प्रतिजापीर्जुह्वन्तं मा मा प्रतिहौषीः
कुर्वन्तं मा मा प्रतिकार्षीः ।
त्वां प्रपद्ये त्वया प्रसूत इदं कर्म करिष्यामि
तन्मे राध्यतां तन्मे समृध्यतां तन्म उपपद्यताम् ।
समुद्रो मा विश्वव्यचा ब्रह्मानुजानातु
तुथो मा विश्ववेदा ब्रह्मणः पुत्रोऽनुजानातु
श्वात्रो मा प्रचेता मैत्रावरुणोऽनुजानातु ।
तस्मै विरूपाक्षाय दन्ताञ्जये समुद्राय विश्वव्यचसे
तुथाय विश्ववेदसे श्वात्राय प्रचेतसे
सहस्राक्षाय ब्रह्मणः पुत्राय नमः ६

सहस्रबाहुर्गौपत्यः

स पशूनभिरक्षतु ।
मयि पुष्टिं पुष्टिपतिर्दधातु
मयि प्रजां प्रजापतिः । स्वाहा ७

कौतोमतँ सँवननँ
सुभागंकरणं मम ।
नाकुली नाम ते माता-
थाहं पुरुषामयः ।
यन्नौ कामस्य विच्छिन्नं
तन्नौ संधेह्योषधे ८

वृक्ष इव पक्वस्तिष्ठसि
सर्वान्कामान्भुवस्पते ।
यस्त्वैनँ वेद तस्मै मे
भोगान्धुक्ष्वाक्षतान्बृहन् ९

सृतँ सत्ये प्रतिष्ठितं
भूतं भविष्यता सह ।
आकाश उपनिरज्ञतु
मह्यमन्नमथो श्रियम् १०

सभिभागोऽसि सर्वस्मिँस्
तदु सर्वं त्वयि श्रितम् ।
तेन सर्वेण सर्वो मा
विवासन विवासय ११

स्कोश इव पूर्णो वसुना
त्वं प्रीतो ददसे धनम् ।
अदृष्टो दृष्टमाभर
सर्वान्कामान्प्रयच्छ मे १२

साकाशस्यैष आकाशो
यदेतद्भाति मण्डलम् ।
एवं त्वा देव यो वेदे-
शानेशां प्रयच्छ मे   १३

स्भूर्भुवः स्वरोँ
सूर्य इव दृशे भूयासम्
अग्निरिव तेजसा वायुरिव प्राणेन
सोम इव गन्धेन बृहस्पतिरिव बुद्ध्या-
श्विनाविव रूपेणेन्द्राग्नी इव बलेन
ब्रह्मभाग एवाहं भूयासं
पाप्मभागा मे द्विषन्तः   १४   ४

मूर्ध्नोऽधि मे वैश्रवणाञ्
छिरसोऽनुप्रवेशिनः ।
ललाटाद्धस्वरान्घोरान्
विघनान्विबृहामि वः । स्वाहा   १

ग्रीवाभ्यो मे स्कन्धाभ्यां मे
नस्तो मेऽनुप्रवेशिनः ।
मुखान्मे वद्वदान्घोरान्
विघनान्विबृहामि वः । स्वाहा   २

बाहुभ्यां मे यतोयतः
पार्श्वयोरुद्धटानधि ।
उरसो वद्वदान्घोरान्
विघनान्विबृहामि वः । स्वाहा   ३

वङ्क्षणाभ्यो मे लोहितादान्

योनिहान्पज्रिहानधि ।
ऊरुभ्यां निश्रिषो घोरान्
विघनान्विबृहामि वः । स्वाहा ४

जङ्घाभ्यां मे यतोयतः
पाष्र्योरुद्धटानधि ।
पादयोर्विकिरान्घोरान्
विघनान्विबृहामि वः । स्वाहा ५

परिबाध्नँ यजामहे
ऽणुजङ्घँ शबलोदरम् ।
यो नोऽयं परिबाधते
दानाय च भगाय च । स्वाहा ६

अपेहि त्वं परिबाध
मा विबाध विबाधथाः ।
सुगं पन्थानं मे कुरु
येन मा धनमेष्यति । स्वाहा ७

प्रजापते न त्वदेतान्यन्यो
विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु
वयँ स्याम पतयो रयीणाम् । स्वाहा ८

यशोऽहं भवामि ब्राह्मणानाँ
यशो राज्ञाँ यशो विशाँ
यशः सत्यस्य भवामि
भवामि यशसो यशः ९

स्पुनर्मा यन्तु देवता

या मदपचक्रमुर्महस्वन्तो महान्तो
भवाम्यस्मिन्पात्रे हरिते सोमपृष्ठे   १०

स्रूप रूपं मे दिश
प्रातरह्नस्य तेजसो
ऽन्नमुग्रस्य प्राशिषम्
अस्तु वै मयि त्वयीदम्
अस्तु त्वयि मयीदम्   ११

स्यदिदं पश्यामि चक्षुषा
त्वया दत्तं प्रभासया
तेन मा भुञ्ज तेन भुक्षिषीय तेन मा विश   १२

सहर्नो अत्यपीपरद्रात्रिर्नो अतिपारयद्
रात्रिर्नो अत्यपीपरदहर्नो अतिपारयत्   १३

सादित्य नावमारोक्षं
पूर्णामपरिपादिनीम् ।
अच्छिद्रां पारयिष्णवीँ
शतारित्राँ स्वस्तये   १४

स्भलाय स्वाहा   १५

स्भल्लाय स्वाहा   १६   ५

वास्तोष्पते प्रतिजानीह्यस्मान्
स्वावेशो अनमीवो भवा नः ।
यत्त्वेमहे प्रति तन्नो जुषस्व
शं नो भव द्विपदे शं चतुष्पदे   १

हये राके सिनीवलि
सिनीवलि पृथुष्टुके ।
सुभद्रे पथ्ये रेवति
पथा नो यश ऋावह । स्वाहा २

ये यन्ति प्राञ्चः पन्थानो
य उ चोत्तरत ऋाययुः ।
ये चेमे सर्वे पन्थानस्
तेभिर्नो यश ऋावह । स्वाहा ३

यथा यन्ति प्रपदो
यथा मासा ऋहर्जरम् ।
एवं मा श्रीधातारः
समवयन्तु सर्वतः । स्वाहा ४

यथा समुद्रँ स्रवन्तीः
समवयन्ति दिशोदिशः ।
एवं मा सखायो ब्रह्मचारिणः
समवयन्तु दिशोदिशः । स्वाहा ५

वसुवन एधि वसुवन एधि वसुवन एधि ६

वशंगमौ देवयानौ युवँ स्थो
यथा युवयोः सर्वाणि भूतानि वशमायन्त्य्
एवं ममासौ वशमेतु । स्वाहा ७

शङ्खश्च मनश्चायुश्च देवयानौ युवँ स्थो
यथा युवयोः सर्वाणि भूतानि वशमायन्त्य्
एवं ममासौ वशमेतु । स्वाहा ८

आकूतीं देवीं मनसा प्रपद्ये
यज्ञस्य मातरँ सुहवा मे अस्तु ।
यस्यास्त एकमक्षरं परँ
सहस्रा अयुतं च शाखास्
तस्यै वाचे निहवे जुहोम्य्
आ मा वरो गच्छतु श्रीर्यशश्च । स्वाहा ९

सिदमहमिमँ विश्वकर्माणँ श्रीवत्समभिजुहोमि । स्वाहा १०

स्पूर्णहोमँ यशसे जुहोमि
योऽस्मै जुहोति वरमस्मै ददाति
वरँ वृणे यशसा भामि लोके । स्वाहा ११

सिन्द्रामवदात्
तमो वः पुरस्ताद्
अहँ वो ज्योतिर्
मामभ्येत सर्वे । स्वाहा १२

सन्नँ वा एकच्छन्दस्यम्
अन्नँ ह्येकं भूतेभ्यश्छन्दयति । स्वाहा १३

स्श्रीर्वा एषा यत्सत्वानो
विरोचनो मयि सत्त्वमवदधातु । स्वाहा १४

सन्नस्य घृतमेव रसस्
तेजःसंपत्कामो जुहोमि । स्वाहा १५

स्क्षुधे स्वाहा १६

स्क्षुत्पिपासाभ्याँ स्वाहा १७

स्मा भैषीर्न मरिष्यसि
जरदष्टिर्भविष्यसि ।
रसँ विषस्य नाविदम्
उग्रस्फेनमिवास्यम् १८

स्तुर गोपाय मा नाथ गोपाय मा-
शस्तिभ्योऽरातिभ्यः
स्वस्त्ययनम् असि १९ ६

हतस्ते अत्रिणा कृमिर्
हतस्ते जमदग्निना ।
गोतमेन तृणीकृतो
ऽत्रैव त्वा कृमे ब्रह्मवद्यमवद्यम् १

भरद्वाजस्य मन्त्रेण
संतृणोमि कृमे त्वा २

कृमिँ ह वक्रतोदिनं
कृमिमान्त्रानुचारिणम् ।
कृमिं द्विशीर्षमर्जुनं
द्विशीर्षँ ह चतुर्हनुम् ३

हतः कृमीणां क्षुद्रको
हता माता हतः पिता ।
अथैषां भिन्नकः कुम्भो
य एषाँ विषधानकः ४

कृमिमिन्द्रस्य बाहुभ्याम्
अवाञ्चं पातयामसि ५

हताः कृमयः साशातिकाः सनीलमक्षिकाः ६ ७

अर्हणा पुत्रवास
सा धेनुरभवद्यमे ।
सा नः पयस्वती दुहा
उत्तरामुत्तराँ समाम् १

इदमहमिमां पद्याँ विराजम्
अन्नाद्यायाधितिष्ठामि २

या ओषधीः सोमराज्ञीर्
बह्वीः शतविचक्षणाः ।
ता मह्यमस्मिन्नासने
अच्छिद्राः शर्म यच्छत ३

या ओषधीः सोमराज्ञीर्
विष्ठिताः पृथिवीमनु ।
ता मह्यमस्मिन्नासने
अच्छिद्राः शर्म यच्छत ४

यतो देवीः प्रतिपश्याम्यापस्
ततो मा राद्धिरागच्छतु ५

सव्यं पादमवनेनिजे
ऽस्मिन्राष्ट्रे श्रियं दधे ६

दक्षिणं पादमवनेनिजे
ऽस्मिन्राष्ट्रे श्रियमावेशयामि ७

पूर्वमन्यमपरमन्यमुभौ पादाववनेनिजे
राष्ट्रस्यद्धर्या अभयस्यावरुद्धयै ८

अन्नस्य राष्ट्रिरसि
राष्ट्रिरहं भूयासम् । ९

स्यशोऽसि यशो मयि धेहि १०

स्यशसो यशोऽसि ११

स्यशसो भक्षोऽसि
महसो भक्षोऽसि
श्रीभक्षोऽसि
श्रियं मयि धेहि । स्वाहा १२

स्मुञ्च गाँ वरुण पाशाद्
द्विषन्तं मेऽभिधेहि
तं जह्यमुष्य चोभयोर्
उत्सृज गामत्तु तृणानि पिबतूदकम् १३

स्माता रुद्रानां दुहिता वसूनाँ
स्वसादित्यानाममृतस्य नाभिः ।
प्र णु वोचं चिकितुषे जनाय
मा गामनागामदितिँ वधिष्ट
ओमुत्सृजत १४ ८

इति द्वितीयो भागः

Credits

Sources: 1. Heinrich Stoenner, Das Mantrabrāhmaṇa, 1. Prapāṭhaka, Diss. Halle/Saale 1901

2. Hans Joergensen, Das Mantrabrāhmaṇa, 2. Prapāṭhaka, Diss. Kiel. Darmstadt 1911

Typescript: Electronically edited by Thomas Zehnder
Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management Vedic Literature Collection